Bill No. 2/07-08

134

2008-0147

बृहद्वृत्तसंक्षेपभारतम् by Some anonymous author - Edited with an Introduction in English by S. Muralidharan Nayar - This treatise describes the main story of महाभारत in different metres. (Trivandrum Sanskrit Series No. 253), Trivandrum, 1983.

$15

1467

# BAHUVṚTTASAMKṢEPABHĀRATAM

Editor

**S. Muralidharan Nayar**




Oriental Research Institute and
Manuscripts Library
University of Kerala, Trivandrum.

Trivandrum Sanskrit Series No. 253
General Editor
**Dr. T. Bhaskaran**

**Bahuvṛttasaṃkṣepabhārata**

Edited by

**S. Muralidharan Nayar**






Published by Dr. T. Bhaskaran, Director, Oriental Research Institute and Manuscripts Library, for the University of Kerala. First Published in 1983 A-D./ 1158 M. E.  Price Rs. 10. Printed at Kumar Printers, Thampanoor, Trivandrum.



# Introduction

The story of the "Mahābhārata" has been a perennial source of interest to generations of scholars as well as laymen. The scholars have been convinced of the necessity of propogating the stories, since they found that the essence of Indian culture is embedded in them. But the variety and the multiplicity of the stories stood in the way of propogation. To surmount this difficulty digests and summaries of the main story chopping off the incidental and irrelevant sub-stories were prepared in Sanskrit, not to speak of the many regional languages of India. The Bahuvṛttasamkṣepabhārata is a fine product of such an attempt at giving the gist of the Bhārata.

As the title itself indicates the work is a summary of the main story of the Mahābhārata in different metres. Altogether there are 229 stanzas in it. Even though there are similar works like Mahābhāratasamgraha and Mahābhāratasamkṣepa this work has its own peculiar features. Simplicity and lucidity are the characteristic marks of the narrative technique of the poet. One can have an easy grasp of the main story of the Mahābhārata even by a casual reading of the poem. The poet has been able to reflect the charm and beauty of the original epic to some extent. To avoid monotony in the narration of the story the poet has resorted to the use of rhythmic variety by employing different metres. Almost all the popular metres current in Sanskrit have been used by the author. In fact it is a veritable mine of Sanskrit metres.



Even though it is not written with the purpose of illustrating Sanskrit metres it serves this purpose also.

The work at the outset traces the lineage of the Pāṇḍavas. They hail from the dynasty of the Moon. The Moon was the son of Brahma and Budha was the son of Moon. His son was Purūravas. From Purūravas Āyus was born and he begot Nahuṣa. Nahuṣa was the progenitor of Yayāti, the Pāṇḍavas being the descendants of Yayāti. In between Yayāti and Pāṇḍu there were many famous kings like Hasti, Duṣyanta, Bharata, Ajāmila, Pratipa and Śantanu. While tracing the line of the great kings of the Lunar race the poet has narrated the story in a succinct manner.

Four stanzas in the concluding portion of the work are devoted to the description of the journey of the Pāṇḍavas and Draupadi towards their heavenly abode. The poet has briefly narrated how all of them except Yudhiṣṭhira collapsed on the way.

In the last stanza the author has alluded to the purpose with which he has composed the work. The reading of the Mahābhārata may lead one to salvation. But it being so voluminous it is impossible to go through it from the beginning to the end. To make the reading easy this summary has been prepared. These who are desirous of getting salvation may read it, discuss it and spread it among the devotees.

We know next to nothing about the author of this work. There is no clue about him either in the work or in the manuscript. The first stanza of the work which runs as follows is an invocation of the Goddess Durga:

"Kālapayodharalalitām
Komalatarakalabhamilitakarṇayugām
Kairavapuravaranilayām
Bhairavadayitāmupāsmahe varadām"

Here Durga is described as having her abode in Kairavapuravara. This seems to be the Sanskritised form of the Malayalam word 'Āmballūr.' This is a village in the Ernakulam District of Kerala State. The Devi temple of Āmballūr was very famous in olden days. It is still there in Āmballūr. An old Nambūtiri Illam, Elayaḍattu Mana,' is in the vicinity of the temple. It is known that Āmballūr Nārāyanan Bhaṭṭatiri was a member of that mana. He was the author of Uṣāpariṇayam Campū and was closely associated with Vidwan Kilimanoor Rāja Rāja Varma Koil Tampurān. (Ulloor S. Parameswara Iyer, Kerala Sāhitya Caritram-Pt.IV. P.P.49-50; Vadakkumkur Rāja Raja Varma: Keraliya Samskṛta Sāhitya Caritram Pt. IV pp. 304-305). Even though Uṣāpariṇayam Campū is not a work of high qualities there is no doubt about the scholarship in Sanskrit of Nārāyaṇa Bhaṭṭatiri. There is a probability of Nārāyana Bhaṭṭatiri being the author of the Bahuvṛttasamikṣepabhārata. This is a guess based on the first stanza, and in the absence of further evidence and the non-attribution of the work to anybody else, it may be presumed that Bhaṭṭatiri is the author of this work.

This is the 253rd publication of the Trivandrum Sanskrit Series, and is based on a single Manuscript, No. 5819, of this Library. The Manuscript was originally supplied by Shri. Govinda Piṣarody of Kailāsapuram in the year 1940. It contains three more works, written in Malayaḷam script. The Manuscript is of the size of 21 CM X 4



CM. There are 34 folios written on both sides, each side having eight lines and fhirty-three letters per line. The number of granthas is estimated to be about 525. The work is included in the Alphabetical Index of the Sanskrit Manuscripts as Mahābhārata samkṣepam. But the colophon of the work reads "Bahuvṛttasamkṣepabhāratam samāptam."

The press copy of the work was prepared by Shri· V. G. Nambudiri, former Senior Research Officer of the Department. But the final touches were given by me. I have received considerable help from K. Visweswari Amma (Research Officer).

I am thankful to Dr. T. Bhaskaran for his valuable help and guidance in the various stages of the preparation of this edition

Kariavattom
11-3-1983.

S. Muralidharan Nayar
Senior Research Officer



# बहुवृत्तसंक्षेपभारतम् ।

काळपयोधरललितां कोमळतरकळभमिळितकर्णयुगाम् ।
कैरवपुरवरनिलयां भैरवदयितामुपास्महे वरदाम् ॥१॥

आसीत्सोम इह श्रुतौ च महितः पुत्रो विधेर्मानसो
वामं कामदमक्षि कैटभभिदश्शम्भोर्जटाभूषणम् ।
तारेयस्तु सुतो बुधोऽस्य समभूदग्र्यो ग्रहाणां गणे
तत्सूनुः स पुरूरवा नरवरस्सोमान्ववायादिमः ॥२॥

आयुस्तस्य सुतस्ततश्च नहुषस्तस्माद्ययातिस्सुतः
पूरुर्भूरिगुणो यदन्वयभवाः ख्याताः क्षितौ पौरवाः ।
हस्तीति प्रथितस्त्वमर्त्यतटिनीतीरे स्वनाम्नादृतं
चक्रे शक्रपुरोपमं पुरवरं पद्मालयायाः पदम् ॥३॥

दुष्यन्तसूनुर्भरतस्ततोऽभूत्तत्सन्ततिश्चाजनि भारतीति ।
जातोऽजमीढश्च कुरुः कुलेऽस्मिन् येनाजमीढाः कुरवश्च रूढाः ॥४॥

प्रतीप इति विख्यातः प्रदीप इव तत्कुले ।
नन्दनस्त्वभवत्तस्य शन्तनुर्नाम भूमिपः ॥५॥

स पालयन् भूवलयं नृपालः
कदाचिदाखेटरसादटव्याम् ।
चिरं चरन् सानुचरः श्रमार्तः
सुरापगातीरमगात् पिपासुः ॥६॥

मूर्तिमत्तानुरागस्तदनु निजपुरीमन्वयादीन्यपृच्छ-
न्नीत्वा विस्रोतसं तां चिरमिव रमयन्नेष चित्तानुवर्ती ।
क्षिप्त्वा सप्त स्वपुत्रान् पयसि पुनरिमामष्टमं पेष्टुकामां
दृष्ट्वा रुष्टश्च दुष्टे किमिदमिति वदन् प्रत्यवादि धुनद्या ॥७॥

गङ्गाहं गाहनीया सुरमुनिमनुजैरष्टवासिष्ठरोष-
प्लुष्टास्त्वेते हि जाता नरवर वसवस्त्वष्टमस्तेषु चैषः ।
दिव्यास्त्रव्यूढदेहं विधिवदधिगताशेषशस्त्रास्त्रशास्त्रं
प्राप्ते दास्यामि काले कुशलिनममुमित्यथावापी प्रयाता ॥८॥

तया भूयः समानीते प्रीतो देवव्रते सुते ।
भारमारोपयन् भूमे रेमेऽसौ मृगयाग्रहात् ॥९॥

आघ्राय सत्सौरभमुत्सुकोऽस्य
मार्गानुसार्येव हि सूर्यपुत्र्याः ।
तीरे विलोक्याकुलधीर्बभूव
धीरोऽप्यसौ धीवरराजकन्याम् ॥१०॥

दाशोक्त्या राज्यशुल्कां किल परिकलयन्नाकुलस्तां निवृत्तो
गाङ्गेयेनास्तसङ्गेन च कृतशपथेनाहृतां द्राग्गृहीत्वा ।
विस्मेरैर्भीष्म भीष्मेत्यमरमुनिगणैरर्चितं स्वेच्छमृत्युं
पुत्रं प्रीत्यानुगृह्णन्नरमत नृपतिःसत्यवत्या स्मरार्तः ॥११॥

चित्राङ्गदश्चापि विचित्रवीर्यं लब्ध्वा सुतौ कालवशे महीशे ।
ज्येष्ठं तयोःसत्त्ववतां वरिष्ठो राष्ट्रे प्रहृष्टोऽभिषिषेच भीमः ॥१२॥

गन्धर्वेण हते द्युसिन्धुतनयश्चित्राङ्गदे भ्रातरं
तस्यैवाधिपतिं विधाय धरणेः काशीशकन्या हरन् ।
आबाल्यादपि साल्वसक्तहृदयामम्बां विसृज्याम्बिकां
प्रीत्या तत्र विचित्रवीर्यमहिषीं चक्रे तथाम्बालिकाम् ॥१३॥

कामी वामेक्षणे ते चिरमिव रमयन्नप्यनुत्पन्नतन्तु–
स्सन्तप्तो राजयक्ष्मक्षपिततनुरगान्नाकलोकं नरेन्द्रः ।
भीष्मो नष्टं स्ववंशं द्विजपरिचरणादेधयिष्यन्महिष्योः
भ्रातुः पुत्राप्तियुक्तिं निभृतमकथयन्मातरं वीतरागः ॥१४॥

आवेद्य सा स्वजननाद्यखिलं मतेऽस्य
सस्मार च स्वतनयस्य मुनेस्समागात् ।
पादानतं च तमियं निजगाद तुष्टा
नष्टं कुरोः कुलमिदं पुनरुद्धरेति ॥१५॥

तद्वाक्याद्विकृताकृतिर्निशि मुनिः सम्भावयन्नम्बिकां
भीतामीलितलोचनामथ विशन्नम्बालिकामन्दिरम् ।
तां चोद्वेगतदात्वपाण्डुरतनुं प्रीत्यानुगृह्यावद-
न्मातर्मातृविकारतो विकृतिमत्पुत्रद्वयं स्यादिति ॥१६॥

यातो मातृगिराम्बिकानिलयनं भूयोऽपि तत्प्रेष्यया
तुष्यन्नेष भुजिष्यया क्षितितले धर्मस्य जन्मादिशत् ।
आनृण्यं भरतान्वयोन्नयनतस्तन्वन् जनन्या गतो
धन्यात्मा धृतराष्ट्रपाण्डुविदुराः पुत्राश्च तत्रोदिताः ॥१७॥



जात्यन्धत्वेऽपि हि ज्यायसि महितगुणे राज्यमासज्य भीष्मः
पाण्डुं सेनान्यमस्यादधदथ विदुरं मन्त्रिकृत्ये न्ययुङ्क्त ।
गान्धारीं धर्मवर्त्मांचरणसहचरीं कुन्तिभोजस्य पुत्रीं
मद्रेशस्यापि च द्रागकृत स कृतधीर्भ्रातृदारानुदारान् ॥१८॥

आखेटार्थमटन्नसौ तटवने पाण्डुर्हिमाद्रेः क्वचित्
सारङ्गाङ्गमनङ्गनिघ्नमिथुना निघ्नन् मुनिं किन्दमम् ।
शप्तस्तेन निरस्तराज्यवनिताभोगोऽपि भोजात्मजा-
माद्रीभ्यां सममद्रिसीम्नि सततोन्निद्रो वितेने तपः ॥१९॥

व्यासादासादितसुतवरां सौवलीमाकलय्य
प्रोद्यद्गर्भां सुतकुतुकिना पाण्डुना संप्रणुन्ना ।
कुन्ती मन्त्रं मुनिनिगदितं भर्तुरावेद्य तस्मात्
लब्धवानुज्ञा सुतमजनयद्धर्मराजात्मजातम् ॥२०॥

कुन्त्याः सन्तानजन्मश्रवणकुपितया स्राविते स्वीयगर्भे
गान्धार्या धार्यमाणे सघृतघटशतेनाथ पाराशरोक्त्या ।
काले बाला बभूवुश्शतमथ तनया दुश्शळाख्या च लोक-
ख्यातैरेतैस्तनूजैरजनि स धृतराष्ट्रोऽपि हृष्टान्तरात्मा ॥२१॥

भूयो वायोस्सुतमतिबलं प्राप कुन्ती तु भीमं
मन्त्राहूतात्तदनु पुरुहूताच्च लेभेऽर्जुनं सा ।
पुत्री मद्रेशितुरपि पृथा मन्त्रवश्याश्विनेय-
प्रीत्या प्रापन्नकुलसहदेवाह्वयावात्मजौ द्वौ ॥२२॥



ते वै देवांशभूताः क्षितिभरहरणायात्तमर्त्यावतारे
विष्णौ कृष्णावतारे यदुकुलजनिते तस्य साहाय्यधुर्याः ।
कन्याशा धन्यशीला मुनिभिरनुपदं लालिता वृत्तचौळा
बालाः कालोपनीतास्सपदि ववृधिरे लब्धविद्यानवद्याः॥२३॥

सुतैरुदारैस्त्रिदिवो यथा द्रुमैः
प्रसूनधन्वेव शरैर्मनोहरैः ।
रराज भूतैरिव पद्मसम्भवो
महद्भिरेतैर्नृपतिः स पञ्चभिः ॥२४॥

वासन्ते समये स्मरार्दितधृतिर्विस्मृत्य पाण्डुर्मुने-
श्शापं मद्रजया सहैव विहरन् नाकं जगाहेऽञ्जसा ।
अन्त्यां मन्त्रविदां मते निजपितुर्दारान्वितस्याहुतिं
खिन्नाः पाण्डुसुता विधाय विधिवच्चक्रुश्च तोयक्रियाम्
॥२५॥

कान्तारादथ दन्तिनामनगरं कुन्त्या समं तापसै-
रानीता धृतराष्ट्रभीष्मविदुरैराश्वास्य च स्वीकृताः ।
पापिष्ठाशयधार्तराष्ट्रजनितैश्शाठ्यैर्गरिष्ठां शुचं
पौराद्यैरधिकादृताश्च परमां प्रापुर्मुदं पाण्डवाः ॥२६॥

कृत्वा शस्त्रविधौ गुरुं बहुगुहं शारद्वतं गौतमं
शिक्षार्थं धृतराष्ट्रपाण्डुजनुषां भीष्मो न तुष्यन् पुनः ।
भारद्वाजमुपागतं भृगुपतेश्शिष्यं सदारात्मजं
द्रोणञ्चापि सपर्यया कृपमते पर्यग्रहीद्वर्यया ॥२७॥



नानादेश्यानपि नृपसुतानेष शस्त्रास्त्रमार्गे
यानेचानेकपरथमुखे मल्लयुद्धे च कल्यान् ।
कृत्वा पार्थं निरुपमगुणे साधिकं प्रीणितात्मा
दत्ते ह्यस्त्राण्यहितपटलीघस्मराणि स्म चास्मै ॥२८॥

पाञ्चालेन समं चिरं गुरुकुलावासं च विश्राणनं
राज्यार्धस्य च तत् प्रतिश्रुतचरं तच्चावमानं पुनः ।
विश्राव्या सुहृदः प्रसह्य हरणं युद्धे च तेनार्थिताः
पार्थाद्या रुरुधुश्च पार्षतपुरं सामर्षहेलाबलैः ॥२९॥

युध्यन् पार्थेन स पृषतभूर्गृह्यमाणोऽथ जीव-
ग्राहं द्रोणाग्रभुवि निहितो मोचितश्चास्य वाचा ।
दीनो मानी निजपुरगतो याजयाज्यश्च लेभे
सूनुं द्रोणद्रुहमनलतः पार्थभोग्यां च पुत्रीम् ॥३०॥

ततः प्रभृति पुत्रवत् प्रणयभाग्गुरुभार्गवा-
र्जितं विविधमर्जुनोदितधनूरहस्यं महत् ।
अनेन भुवि धन्विनामधिभुवापि राधासुतः
सुयोधनहितोऽभवत्सततवृद्धया स्पर्धया ॥३१॥

नद्यां निद्रायितं पातय पवनसुतं दन्दशूकैरमन्दो-
त्साहैस्सन्दंशयैनं गरळमविरळं दापयास्मै गुणैस्स्वैः ।
यद्वासं द्वापरांशात्मजशकुनियुतः कौरवो नैव चक्रे
कल्यात्मा देवतुल्येष्वनवधि कृतपुण्येषु पाण्डोस्सुतेषु ॥३२॥



व्यर्थारम्भतया विवृद्धकलुषस्तानेष मात्रा समं
दग्धुं कल्पितवारणावतपुरावासं निदेशात् पितुः ।
विस्रब्धेन पुरोचनेन स्वयंतेषां गृहं जातुषं
तस्मिन्नध्यैः स्म सुयोधनस्तरिलधीर्जागर्ति नक्तन्दिवम् ॥३३॥

तातादेशादधिजतुगृहं संवसन्तस्सहाम्बा
जाताशङ्का विदुरवचनैस्सावहित्थाश्च पार्थाः ।
षण्मासान्ते गृहमपि च तत्पञ्चपुत्रां निषादीं
दग्ध्वा तत्राप्यहितसचिवं दुःखिता निर्गतास्ते ॥३४॥

सार्धं मात्रा विबुधतटिनीं क्षत्तृभृत्यात्तनावा
तीर्त्वा रात्रौ वनभुवि हते भीममुष्ट्या हिडिम्बे ।
सुप्रीतायां पवनतनयादात्मजाप्त्या हिडिम्ब्यां
विप्राकारा मुनिवरगिरा चावसन्नेकचक्राम् ॥३५॥

बकवधमुदितैरिह द्विजेन्द्रै-
र्बहुमतमाश्रितकृत्यभीमयुक्ताः ।
प्रतिभवनमुपात्तयुक्तभिक्षाः
सुखमवसन् सुचिरं पृथातनूजाः ॥३६॥

श्रुत्वा दग्धांस्तु पार्थान् द्रुपदनरपतिस्तत्प्रदेयान्तनूजां
दित्सुर्वीराय कस्मैचन सह सचिवैरुद्यतोद्वाहघोषाः ।
लक्षं यन्त्रान्तलक्ष्यं धनुरधिकदृढं चाथ पञ्चापि बाणा-
नुत्पाद्यानल्पतेजास्सकलनृपकुलायादिशद् दूतलोकम् ॥३७॥



सर्वेऽप्युर्वीशमुख्या निशमिततदुदन्तोन्मिषन्मन्मथार्ति-
स्फूर्त्या पर्यस्तधैर्यास्त्वरितमभिययुर्द्रौपदीं राजधानीम् ।
पृथ्वीदेवाश्च विश्वे कुतुकतरलितास्संम्मिलन्तस्समन्ता-
द्यायान्तोऽन्ये च वर्णा विदधति हि पुरा भूरिशोभां
पुरीन्ताम् ॥३८॥

सुनीथबार्हद्रथमद्रनाथप्रधानमात्तायुधनैकयोधम् ।
सुयोधनादिप्रमुखं नृपाणां बलं च पाञ्चालपुरं प्रपेदे ॥३९॥

दैवोऽसौ वासुदेवो द्रुपदनृपतनूजोत्सवं मानयिष्यन्
पार्थानां कीर्तिलक्ष्मीमपि नृपसमितावेधयिष्यन्नमुष्याम् ।
सन्नद्धैस्सात्वतौघैस्सह च हलभृता तत्पुरं सत्यभामा-
युक्तो भक्तैकबन्धुस्स्वयमपि भगवानाजगामाकुलात्मा ॥४०॥

आकर्ण्यागन्तुकाद्विप्रात्पार्थो वार्तामिमां समम् ।
सञ्जातलौल्याः पाञ्चाल्यां सार्धं मात्रा प्रतस्थिरे ॥४१॥

मध्ये वर्त्ममर्त्यलोकतटिनीमुत्तीर्य दृष्ट्वा स्थितम् ।
जित्वा चित्ररथं तदीयवचसा कृत्वा च सौम्यं गुरुम् ।
हर्षात्तार्षतमन्दिरं द्विजवरैस्साकं गतास्संगतै-
रम्बां कुम्भकृतो निधाय भवने भेजुस्सभां भूभुजाम् ॥४२॥

लक्ष्यं पक्षिप्रतिकृतिमयं दुर्वहञ्चापि चापं
भूपानापादितनिजनिजप्राभवप्रौढिभाजः ।
देवश्चावेदितगुरुकृपासारनिष्यन्दिनेत्रम्
पार्था धात्रीविबुधसमितावीक्षमीक्षं न्यषीदन् ॥४३॥



धृष्टद्युम्नः स तु पितृगिरा साधु सम्पूज्य सर्वा-
नुर्वीदेवप्रहितबहुरूपाशिषं चारुवेषाम् ।
कृष्णां कृत्स्नाभरणसुषमारूषिताङ्गीं सुरङ्गं
नीत्वा धात्रीगणपरिवृतामूचिवान् वाचमेनाम् ॥४४॥

हे भूपा भारतीं मे शृणुत धनुरिदं साधु कृत्वा ततज्यं
सन्धायावन्ध्ययत्नस्सुखमिव विशिखानञ्जसा पञ्च मुञ्चन् ।
लक्षं यः क्षिप्रहस्तः क्षितिपतिरिषुभिः छेत्स्यते मत्स्वसा तं
कृष्णा वीरं वरीता धनुषि च विजयख्यातिरस्यास्तु मुख्या
॥४५॥

निर्णीतार्थां द्रुपदतनयस्येत्थमाकर्ण्य वाणीं
कन्यां निर्वर्ण्य च नृपतयो मन्मथेन प्रणुन्नाः ।
उत्थायोच्चैस्त्वरमथ धनुर्यत्नतो व्यर्थयत्ना
लग्ना रुग्णावयवविवशा भग्नसत्त्वा निवृत्ताः ॥४६॥

चेदिमागधमद्राङ्गनाथेष्वथ वृथोद्यमसु ।
पृथासुनस्समुत्तस्थौ ततो मध्याद् द्विजन्मनाम् ॥४७॥

वारितो भूसुरैः कैश्चित्प्रेषितश्च परैरसौ ।
प्राप चापान्तिकं वीरः क्षोभयन् क्ष्माभृतां गणम् ॥४८॥

स निरीक्ष्य धनुस्सुदुर्ग्रहं प्रणमन् द्रोणपदं हृदा मुहुः ।
जगृहे विहितप्रदक्षिणः सगुणं चातनुत क्षणादिव ॥४९॥

संहितश्च शरपञ्चकमस्मिन् मुञ्चति च्युतमधिक्षिति लक्ष्मम् ।
दिव्यसूननिकरावृतमूर्तिं सव्यसाचिनमथावृत कृष्णा ॥५०॥



वीक्ष्य तत् क्षितिभृतोऽथ पार्षते रूक्षरोषकलुषा रणोद्यता:
तीक्ष्णपार्थशरविक्षता: क्षणेनोक्षिताश्च रुधिरै: प्रदुद्रुवु:
।।५१।।

भूसुरैस्सह कुलालकुलेशस्यालयं प्रति गतान् सहकृष्णान् ।
कृष्णमीक्ष्य तु मिथश्चरितार्थान् पार्षतो निरचिनोदथ पार्थान्
।।५२।।

कानीनोक्त्या तान्मिथ: प्राक्तनेन्द्रान्
जानानोऽसाविन्द्रसेनां च कृष्णाम् ।
पाञ्चालेन्द्रो ग्राहयामास पाणिं
प्रीत्या पुत्र्या: पञ्चभि: पाण्डुपुत्रै: ।।५३।।

वृत्ते विवाहे सुखिनोऽथ पार्थान्
श्रुत्वा निवृत्त: पथि धार्तराष्ट्र: ।
समं बलैस्सौबलसूर्यजाद्यै-
र्न्यरुन्ध पाञ्चालपुरं रुषान्ध: ।।५४।।

पलायिते पार्षतभूपसैन्ये
बलेन विद्राव्य सुयोधनाद्यान् ।
कृष्णागमापास्तसमस्तखेदा:
कृष्णासमेता मुमुदुश्च पार्था: ।।५५।।

पार्थानामुदयं निजात्मजपराभूतिं च श्रृण्वन् भृशं
खिन्नो जह्नुसुतादिमन्त्रिसमितो सम्मन्त्र्य चासौ नृप: ।

क्षत्त्रानाय्य वितीर्य चार्थमवनेः पूर्वैः स्थितं खाण्डव-
प्रस्थं तद्व्रजतेति ताननृजुधीः कृष्णन्वितानन्वशात् ॥५६॥

श्रीकृष्णानुस्मृतेन्द्रप्रहित इह वने विश्वकर्मा सुधर्मा-
रम्याभान्निर्ममे द्रागुपवननगरीं वासवप्रस्थसंज्ञाम् ।
भक्तेष्वत्र प्रविष्टेष्वधिकविभवतुष्टेषु पैतृष्वसेये-
ष्वापृच्छ्यैनान् कृपाब्धिःस्वपुरमभिययौ द्वारकां दानवारिः
॥५७॥

वीणापाणिरुपेत्य तान् मुनिवरस्सुन्दोपसुन्दाश्रयां
विश्राव्याथ कथां मिथः प्रणयिनां वैरं वदन् स्त्रीकृते ।
प्रत्यब्दावधि कल्पितप्रियतमाभोगान् समामन्त्र्य तान्
पाञ्चालीञ्च तथानुगृह्य मुदितस्सद्योऽगमद् द्यां मुनिः ॥५८॥

भुञ्जानानां मुनिसमयतस्तत्र पाञ्चालपुत्रीं
पञ्चानाञ्चाप्यखिलधरणीरक्षणे दीक्षितानाम् ।
चोरैर्दूरादपहृतपशोः कस्यचित् क्ष्मासुरस्य
त्राणं पार्थस्य तु समभवत्तीर्थयात्रानिमित्तम् ॥५९॥

प्रादक्षिण्यविधौ क्षितेर्गुरुगिरा प्रस्थाय गौरीगुरोः
प्रस्थेऽमर्त्यधुनीजले नियमवान् मज्जन्नुलूप्याहृतः ।
सङ्गत्याङ्गजसङ्गरेण सुखयन्नेनामनङ्गार्पितां
कृत्वा चायमिरावता सुतवतीं प्रीत्या प्रतस्थे पुनः ॥६०॥

पृथ्वीदेवैस्सह कतिपयैरौत्तराहाणि तीर्था-
न्यासेव्यासौ व्यवसितमतिः प्राच्यवाच्यौ च गच्छन् ।
पाण्ड्यक्षोण्या नृपदुहितरं प्राप्य चित्राङ्गदाख्यां
तस्यां पुत्रं पुनरजनयद् बभ्रुवाहाभिधानम् ॥६१॥

प्रस्थाय भूयोऽप्यपराब्धिपारं
तीर्थानि पुण्यानि निषेव्यमाणः ।
क्रमात्समाक्रम्य च तत् प्रभासं
गदात्सुभद्रामशृणोत्सुभद्राम् ॥६२॥

तस्मात्रैष स्मरपरवशस्तत्र कृष्णस्य सख्युः
भिक्षुच्छद्मा तदनुमतितो द्वारकाग्रामवासी ।
निन्ये कालं कमपि कपटैर्भद्रया दत्तभिक्षो
वीक्षं वीक्षं विधुरितधृतिर्माधुरीं कातराक्ष्याः ॥६३॥

स्वोपायवर्तितमहोत्सवकौतुकेन
द्वीपान्तरं प्रति गतेषु यदूद्वहेषु ।
उद्वाहयन् हरिसुतेन हरिः स्वसारं
प्रत्येयिवानविदितस्सुहृदाञ्च मध्यम् ॥६४॥

मुग्धां तां कतिचिद्दिनानि रमयन् प्रस्थाय पार्थस्ततः
शुद्धान्तादधिरूढसज्जितरथस्सज्यं दधानो धनुः ।
प्रेयस्या नियमितवर्यधुर्यतुरगस्तन्वन्द्रुतान् सात्वतान्
साहस्रैर्विनिवर्त्य पत्त्रनिवहैर्वेगादगात्स्वां पुरीम् ॥६५॥



निशमितत्दुदन्तानन्धक्रोधान् क्रुधान्धं
मुसलिनमपि देव: सान्त्वयित्वा समं तै: ।
पुरवरमुपयातो वासवप्रस्थसंज्ञं
विविधहरणवित्तै: प्रीणयामास पार्थान् ॥६६॥

यदुकुलमखिलं विसृज्य भूयो
मुदितमति: सममर्जुनेन कृष्ण: ।
अरमत नगरे ससत्यभाम-
श्चिरमिह पाण्डुसुतप्रियैकतान: ॥६७॥

सौभद्रो विजयात्मजस्समजनि प्राग्द्रौपदेयास्तत:
पञ्चानां पृथाभुवां समभवन् पुत्रा: प्रशस्ता गुणै: ।
स्वेषु स्वेषु सुयोधनप्रभृतयो दारेष्वथो भानुम-
त्याद्येष्वात्मगुणोचितांश्च तनयांश्चापुर्मुदं चाधिकाम् ॥६८॥

विश्वलो विदितं जयद्रथं
दुश्शळालभत सैन्धवं धवम् ।
अचलं कुरुते: स सौहृदं
तच्च लाभमनुभूयिवान् नृप: ॥६९॥

काले कदाचन कठोरखरांशुताप-
व्यालीढभूलुठितपेलवसत्त्वजाले ।
नारीजनेन मिळितेन मुरारिपार्थौ
तीरं कळिन्ददुहितुस्सहितावयाताम् ॥७०॥



कालिन्द्यास्सलिलान्तरे तटवनोपान्ते च कान्तासखौ
क्रीडन्तौ भृशमेत्य केशवगुडाकेशौ कृशानुःस्वयम् ।
बिभ्रद्विप्रवपुः प्रसन्नवदनस्तौ तोषयन्नाशिषा
भोज्यं प्राज्यमयाचतात्मरुचितं दातुं वदान्यौ तदा ॥७१॥

ज्ञात्वाग्निं स्वयमर्थिनं द्विजमम् सद्यो दिधक्षुं वनं
रक्ष्यं तक्षकसख्यतः खलु सहस्राक्षस्य तत् खाण्डवम् ।
कृष्णस्यानुमते प्रतिश्रुततदीयार्थस्य पार्थस्ततः
वव्रे दिव्यरणोचितं परिकरं लेभेऽखिलं चानिलात् ॥७२॥

तूणौ बाणाभिपूर्णौ धनुरधिकदृढं गाण्डिवं पाण्डुराभा-
नश्वान् रथ्यान् कपीन्द्रध्वजमपि च रथं प्राप्य हृष्टोऽथ जिष्णुः ।
कृष्णे सारथ्यनिष्णे भगवति धृतगोधाङ्गुलित्रो रथाग्र्ये
तस्थौ जैत्रे धनुर्ज्याजनितघनरवत्रासितारण्यसत्त्वः ॥७३॥

लब्ध्वा मैत्रीमधिकमुदितः कृष्णयोः कृष्णवर्त्मा
तावद्दावं बहुखलकुलावासमारब्ध दग्धुम् ।
क्रुद्धश्शक्रस्स च जलमुचस्तक्षकक्षेमकाङ्क्षी
प्रागादिक्षद्बलमपि निजं कृष्णपार्थौ रुरुत्सुः ॥७४॥

घनाघनवितानिते वियति घोरधाराहृति क्षणा-
पहृतवैभवे हुतवहे जवादर्जुनः ।
निरन्तरविसृत्वरैश्शरशतैर्विहायस्स्थितै-
रुपर्युपरि काननं व्यधित वेश्म विस्मापकम् ॥७५॥



निगीर्य तनयं निजं दवभियोत्थितां पत्रिणा
ततश्च विजय: क्षणाद्वियति तक्षकस्य प्रियाम् ।
स मृत्युमुखतश्च्युत: भणभृदश्वसेनो भिया
श्रितश्च सवितु: सुतं शरधिमस्य चाशिश्रयत् ॥७६॥

मेघान् मोघान् सुरौघानपि च मघवा वीक्षमाण: सहस्रे-
णाक्ष्णां रूक्षारुणानामरुणदधिरणं कृष्णपार्थौ महास्त्रै: ।
ताभ्याञ्चाभ्याहतास्त्रस्त्रिदशपरिवृढो गाढविद्धश्च नाकं
वेगेनागाद्विजानन् प्रियसखरहितं खाण्डवं पूर्णमोद: ॥७७॥

मुक्त्वा शार्ङ्गकपक्षिणस्स चतुरान् ब्रह्मर्षिपुत्रान् कृत-
स्तोत्रान् पार्थगिरा मयञ्च निखिलं दग्ध्वाश्रयाशो वनम् ।
दत्ताशी: परिपूज्य निर्जितसुरानीको पुराणौ मुनी
प्रीत्यापृच्छ्य च विश्वविश्रुतयशोभाजौ तिरोऽभूद्दृशो: ॥७८॥

हरौ पुरीं स्वां प्रति सम्प्रयाते सुरारिशिल्पी विजयप्रियैषी ।
सभां नृपायाकृतभूरिरत्नैरनल्पशिल्पार्पितदिक्प्रमोहाम्
॥७९॥

अधिवसति सभां तां धर्मजे रम्यकीर्तौ
सुरमुनिरभियातो नारदो मोदशाली ।
रहसि पितृनिदेशं राजसूयं विधेयं
विधिवदिति च विश्राव्याश्वयीद्दिव्यलोकम् ॥८०॥



दैत्यारिस्तावदामाद्य पार्थान्
पाण्डोश्शृण्वन् नारदोक्तं च वाक्यम् ।
मत्वा शक्तं मागधं तद्विघाते
भीमेनामुं घातयिष्यन् प्रतस्थे ॥८१॥

दत्तानुज्ञः स राज्ञा पवनजविजयानुद्रुतः प्राप्य सद्यो
गेहं बार्हद्रथस्य द्विजवरवपुषा व्यज्यमानार्थिमुद्रः ।
पृष्टाभीष्टः प्रहृष्टेन च सदसि जरासूनुना बाहुयुद्धे-
नार्थी ब्रह्मण्यमुख्याय च नरपतये तत्त्वमाख्यद्यथास्वम् ॥८२॥

ज्ञात्वा तथ्येन कृष्णं विजयमपि विहाध्वाय प्रवृत्तं
वायोः पुत्रेण पृथ्वीपतिमतुलबलं घातयन्नीतिशाली ।
कृत्वा तस्यैव पुत्रं मगधपतिमनेनावशान्मोचयित्वा
पृथ्वीशानत्र बद्धान् प्रणतहितरतः प्राप्तवान् पार्थिवेद्रम्
॥८३॥

पुनरागमनायैव स्वपुराभिमुखे हरौ
अनुजांश्चतुरो राजा विजयाय दिशामशात् ॥८४॥

प्राचीं प्रभञ्जनसुतस्सधनञ्जयस्तु
जित्वोत्तरामपि दिशं नकुलः प्रतीचीम् ।
तीक्ष्णोऽहितेषु सहजोऽस्य च दक्षिणाशां
यक्षाधिपेऽभ्युपधनैः स्वपुरीमवापुः ॥८५॥



प्राप प्राभृतयन् धनानि विविधान्यानन्दयन् पाण्डवान्
गोविन्दो यदुवृन्दसैन्यपटलीतन्वीगणैरन्वितः ।
अन्येऽप्यर्णवमेखलाधिपतयो धर्मात्मजन्माज्ञया
यज्ञं मानयितुं तमापुरुपदामादाय मोदान्नृपाः ।८७।।

सम्भारेषु सुसम्भृतेषु सकलेष्वह्नाय पाण्डोस्सुतः
पुण्येऽह्न्युदितेऽनुमान्य तु गुरून् भीष्माम्बिकेयादिकान् ।
आर्त्विज्ये विधिवद्वृतैर्द्विजवरैर्द्वैपायनाद्यैस्समं
कृष्णे जाग्रति रक्षणाय नृवरो यज्ञाय सज्जोऽभवत् ।।८८।।

तत्तन्मन्त्रार्थतत्त्वप्रणिहितहृदयेनैव निर्वर्त्यमान-
श्चातुर्होत्रेण पात्रार्पितविविधधनक्षिप्तयक्षेशलक्ष्मीः ।
पृथ्वीशैर्भक्तिमद्भिस्त्वरितमुचिततद्भृत्यकृत्योऽस्तविघ्नो
यज्ञो राज्ञश्च काशे नतकुशलकृता चक्रिणा क्लुप्तरक्षः ।।८९।।

शास्त्रौघाध्ययनैस्तदर्थकथनैश्शस्त्रास्त्रयोग्याग्रहै-
र्दीप्यद्दिव्यसभाविलोकनरसैर्नानाकलाशीलनैः ।
वादैरादिमहीभृतामथ कथायोगैश्च योगादिभि-
र्निन्युस्तत्र दिनान्यनन्यमनसो लोका मखेऽस्मिन् सुखम् ।।९०।।

तत्राभिषेचनीयस्य सुत्याहे भीष्मशासनात् ।
अग्र्यपूजां नृपश्चक्रे चक्रपाणौ यथाक्रमम् ।।९१।।

अथ तदसहमानो दामघोषिः सरोषा-
दिषुभिरिव वचोभिः कृष्णभीष्मावतक्षत् ।



नृपतिमवरजांश्चाप्यस्य भूयोऽभिनिन्दन्
मखविहतिकृते च प्रोच्चचालासनात्स्वात् ।।९२।।

उद्यते यज्ञविघ्नाय सज्यचापे नृपाधमे ।
चक्रेण तीक्ष्णधारेण चिच्छेदास्य शिरो हरिः ।।९३।।

चेदीशे दीनबन्धौ भगवति मिळिते तेजसा राजसूयं
भूयो राजा यथाविध्यवभृथसुभगं साधुनिर्वर्त्य सर्वम् ।
प्रीतो विप्रादिवर्णानपि बहुविभवैः प्रीणयन्नर्चितात्मा
देवे स्वावासयातेऽप्यरमत नगरे सानुजो धर्मराजः ।।९४।।

आपूर्वापरसागरञ्च धरणीमामेरुलङ्कापुरं
भीमाद्यैर्विजितां क्रतौ च विविधां सम्पादितां सम्पदम् ।
स्वे जाळ्ये च सभावलोकनभवे हास्यञ्च सञ्चिन्तयन्
पाञ्चाल्या हृदि शल्यमाधिमधिकं भेजेऽथ दुर्योधनः ।।९५।।

राधेयेन स सौबलेन च समं सम्मन्त्र्य कुन्तीसुतं
तावत्सावरजं सदारमुपहूयात्तावहित्थोऽर्हयन् ।
द्यूते चाथ कथानुषङ्गजनिते भूषारथाश्वद्विपं
राज्यं प्राज्यतरं पुरञ्च सहजां जिग्ये छलेनाखिलम् ।।९६।।

प्राज्ञे राज्ञ्यपि चात्मनैव पणिते पाञ्चालपुत्रीं जितां
पश्चान्नेतुमिहेच्छतः कुरुपतेर्दुश्शासनश्शासनात् ।



आकृष्यैव कचेष्वजस्रहदितां कृष्णेति कृष्णां बला-
न्नग्नं कर्तुमशक्नुवन् नृपसभे श्रान्तोऽपतद्भूतले ॥९७॥

भीमसेनस्तदालोक्य क्षमाभाजि क्षमाभुजि
दुःशासनास्रपानाय प्रत्यश्रौषीद्रुषा ज्वलन् ॥९८॥

अन्यैः कर्णमुखार्दनेऽर्जुनमुखैश्चाप्याश्रुते रोषितैः
पार्षत्या च सुयोधनोरुनिधने शप्तेऽनुतप्तात्मना
अन्धेनानुमता नृपेण पणितं लब्ध्वाखिलं प्रस्थिता-
श्चाहूता हि पुनर्दुरोदरविधौ वै हन्त कुन्तीसुताः ॥९९॥

द्यूते ये तु जिता वसन्तु विपिने ते द्वादशाब्दान् परै-
रज्ञाताश्च तथैकमब्द यदि चेज्ज्ञाताः क्रमोऽयं पुनः ।
इत्थं ग्लुप्तपणा जिताश्च कितवैस्सद्यस्सदारायुधा
माता क्षत्तृगृहस्थया त्वनुमतास्ते हस्तिनात्प्रस्थिताः ॥१००॥

विप्रानप्यनुयायिनो यतिवरानाराध्य सूरार्पिते
पात्रे तद्भवभक्तभुक्तिसुभृतान् सम्प्रीणयन्तोऽन्वहम् ।
कृम्मीरोन्मथनान्मरुत्सुतकृतालम्बा वनं काम्यकं
सम्प्राप्य न्यवसंश्च वल्कवसना वन्याशिनः पाण्डवाः ॥१०१॥

आश्वास्य तानुपगतो वनसीम्नि शौरिः
सौभद्रमात्मभगिनीमपि सौभमाथी ।



पश्चापि तान् द्रुपदजातनयान् स धृष्ट-
द्युम्नोऽपि खिन्नहृदयःस्वपुरीं निनाय ॥१०२॥

पार्षत्याः परुषगिरा पृषदश्वभुवश्च रुषितवाक्येन
खिन्दानं धर्मसुतं गन्धवतीनन्दनो मुनीन्द्रोऽगात् ॥१०३॥

अस्त्रे पाशुपते लब्धे युद्धे स्याद्विजयस्तव ।
इत्यादिश्य गते व्यासे तत्रासौ पार्थमन्वशात् ॥१०४॥

आज्ञां राज्ञे दधानो धनुरपि च दिशामुत्तरां प्रस्थितोऽसौ
शैलं कैलासमेत्य स्थिरमतिरतनोत्साधुशस्यां तपस्याम् ।
वेषं नैषादमादाय च समुपगतो युध्यतःपोत्रिहेतो-
स्सत्त्वोत्कर्षेऽस्य हृष्यन् पशुपतिरदिशद्विश्वजैत्रं निजास्त्रम
॥१०५॥

दत्तेष्वस्त्रेष्वपि दिगधिपैस्स्वेषु शक्रेण तोषा-
न्नीतो नाकं सुखमवसदत्राखिलास्त्रेष्वधीती ।
पार्थास्त्वन्ये विजयविरहात्खिन्नचित्ता वनान्ते
कालं निन्युःश्रुतनळकथा बार्हदश्वैर्वचोभिः ॥१०६॥

प्राप्तेनात्र त्रिदशमुनिना लोमशेनोर्वशीशा-
पाद्यैर्हृद्यै रहसि कथिते पार्थवृत्ते समाप्ते ।
तीर्थैनार्थी सुरमुनिगिरा धर्मजो धौम्यमुख्यै-
र्भीमाद्यैश्चाप्यचलदखिलक्ष्मातलालोकनोत्कः ॥१०७॥

भक्त्या तीर्थान्यनुपदमथो सेव्यमानाः क्रमात्ते
पृथ्वीचक्रं कथमपि समाक्रम्य याताः प्रभासम् ।



कृष्णां कृष्णीनपि बलमुखान् वीक्ष्य तत्र प्रबाणाः
याता भूयो बत बदरिकाख्याश्रमञ्चाद्यवात्सुः ॥१९८॥

आनीते पवनेन दिव्यकुसुमे कस्मिंश्चिदत्युत्सुकां
कृष्णां प्रीणयितुं कदापि विजने भीमोऽनया याचितः ।
मानी घोरगदाधरो गिरिवरं गन्धानुसारी जवा-
दारूढः पथि गन्धमादनतटे व्यालोकतैकं कपिम् ॥१०९॥

वायोस्सूनुस्स जानन् निजसहजममुं मानमस्यापनेष्यन्
पन्थानं तत्र रुन्धन् जरठकपिवपुर्भीमनिर्भर्त्स्यमानः ।
पुच्छाग्रोत्क्षेपयत्नक्षपितभुजमदायाभिधायार्थतत्त्वं
भर्तुर्वृत्तं रघूणामपि समकथयद्भक्तिभारार्द्रचेताः ॥११०॥

अम्भोधिलङ्घि पृथुलं घनघोरनादं
सम्प्रेरितस्सहभुवा स्ववपुःप्रकाश्य ।
तं भीतवत्पदनतं परिरम्भणेन
सम्भाव्य सौम्यवपुरेष गिरं बभाषे ॥१११॥

भ्रातः प्रीतोऽस्मि भक्ते त्वयि चिरमवतादाहवे राघवस्त्वां
सत्यं कर्तास्मि साह्यं मृधभुवि भवतां पार्थकेतुस्थितोऽहम् ।
पन्था हन्तैष सौगन्धिकमहितसरस्संश्रितो गच्छ वीर
स्वेच्छं माभूत्स्वभङ्गः क्वचिदिह हि तवेत्यूक्षवर्यस्तिरोऽभूत्
॥११२॥

हनूमति तिरोहिते तदुदितेन यातः पथा
सरोवरमुपागमत्सुरभिगन्धसौगन्धिकम् ।



विरोधिषु पलायितेष्वनुचरेषु वित्तेशितु-
ग्र्गृहीतकुसुमस्ततो निववृते च भीमः कृती ॥११३॥

चिन्तानन्तरहिण्डितेन सहसा नीतान् हिडिम्बीभुवा
स्कन्धोढां द्रुपदात्मजां च सहजानालोक्य जातक्लमान् ।
स्वोदन्तैर्मुदितान् विधाय निखिलान् पुष्पार्पणैश्च प्रियां
दिव्येषु व्यहरत्सदारसहजो देशेषु भीमोऽप्यभीः ॥११४॥

कदापि भीमो मृगयापरश्चरन् सदारसोदर्यहरं जटासुरम् ।
निवर्तमानोऽर्धपथे विलोकयन् जवादमृत्नात्तमरत्निताडनैः ॥११५॥

भीमसाहसविशेषरोषिते तोषिते च धनदे नृपेण ते ।
श्वेतपर्वतगतास्समागतं श्वेतवाहनमलोकयन्दिवः ॥११६॥

वर्षाणि पञ्च स वसन् दिवि नर्तनाद्यै-
र्हर्षावहश्चलदृशामखिलास्त्रवेदी ।
हन्ता निवातकवचादिमहासुराणां
सन्तोषयन् सुरपतिं पुनराप भूपम् ॥११७॥

तं भ्रातरोऽथ कथितत्रिदिवोत्थवृत्तं
सम्भाव्य सम्भृतमुदं सह धौम्यमुख्यैः ।
सम्प्रीतपार्षतसुतासहिताः क्रमेण
सम्प्राप्य काम्यकमिह न्यवसन् नृपालाः ॥११८॥



कदापि मृगयारसाद्वनं गते स्वयं मारुतौ
महाजगरगोचरे श्रुततदार्तनादो नृपः ।
उपेत्य निपुणोक्तिभिर्नहुषपूर्वदर्वीकरा-
दमोचयदमुन्ततःस कलशयोनिशापाच्च्युतम् ॥११९॥

निशम्य काम्यकावासान् सुधियस्तान् सुयोधनः ।
घोषयात्राभिषेणागान्निजैश्वर्यं प्रदर्शयन् ॥१२०॥

कर्णगान्धारकैस्सैन्यैस्तन्वीभिश्च समन्वितम् ।
वृत्रारिवाचा गन्धर्वश्चित्रसेनो रुरोध तम् ॥१२१॥

गान्धारीसुतगन्धर्वसैन्ययोः क्लृप्तजन्ययोः ।
पराद्रवद्भयात्कर्णो रणात्त्यक्त्वा कुरूद्वहम् ॥१२२॥

राधेये धावमाने सभयमपसृते सौबले तद्बले चा-
प्यारोप्याबद्धपश्चात्कृतभुजयुगळं स्वे रथे कौरवन्तम् ।
गच्छद्गन्धर्वराजं विजयिभिरनुगैस्साधु गीतापदानं
चत्वारस्सज्यचापास्त्वरितमभिययुः पार्थिवोक्त्यैव पार्थाः
॥१२३॥

पार्थास्त्रैर्गाढविद्धो निहतबहुभटश्चित्रसेनो निवृत्तो
निर्बद्धो बद्धमौनं धरणिपतिपुरः स्थापयन् प्रस्थितः स्वः ।
दत्तानुज्ञोऽथ राज्ञा दिविचरकरतो मोचितोऽयं प्रयातो
लज्जावेशाज्जिहासुः कुरुनृपतिरसून् वारितोऽभूत्स्वमित्रैः
॥१२४॥



पार्थेष्वात्तशरासनेषु मृगयालोलेषु साल्वालयं
याश्यन्नाश्रमसीम्नि वीक्ष्य दयितां तेषां निनीषुर्गृहान् ।
आकृष्यार्यहलं कचेषु चलितो दूरागतैराशु तै-
र्भल्लैर्लूनशिरोरुहश्च विकृताकारः कृतस्सैन्धवः ॥१२५॥

स जिष्णुर्हरिसखान् हरमाराध्य लब्धवान् ।
वरमेकाह्विजयमन्येषां विजयादृतं ॥१२६॥

मार्कण्डेयमखण्डितोग्रतपसं पाण्डोस्सुतास्स्वाश्रमं
व्यासाद्यैस्समागतं मुनिवरैरासाद्य भक्त्यार्चयन् ।
एनान्दीनधियोऽनुनीय च मुनिर्दुःखी तु दुःखाधिकान्
पश्येदित्युपदिश्य रामचरितं निश्शेषमश्रावयत् ॥१२७॥

स्वप्ने विप्रवपुः कदापि दिनकृत्कर्णं समेत्यात्मनः
कुन्त्यां जातममुं तथा वलभिदश्चैतत्तनुर्याचिताम् ।
तस्यादेयतया जयञ्च कथयन् दानोत्सुकेनाथवे
तस्मिन् प्राप स शक्रशक्तिवरणायादिश्य चादृश्यताम् ॥१२८॥

काले क्वापि बलारिरर्कतनयं तं प्राप्य विप्राकृतिः
कर्म वर्म च कुण्डलं सहजमप्यायाचतादित्सया ।
जानन्नेनमनन्यहार्यलपितं वृत्रद्विषं शक्तिमस्या-
दायैकनिषूदिनीमभिमतश्चापूरयत्कूरविद: ॥१२९॥

धर्मो निर्मलचेतसं मृगवपुः पूर्वं परीचिक्षिषु-
र्विप्रस्याश्रमशाखिलग्नमरणिं हृत्वा जगाहे वनम् ।



पार्थाश्चात्तशरासनाः क्षितिसुरक्षैमैकदीक्षाश्चिरा-
दन्विष्यैनमदृश्यमृश्यमधिकश्रान्ताःश्रिताश्शखिनम् ॥१३०॥

ग्रीष्मोष्मग्लपितास्तथा च तृषिता वृक्षाग्रतो लक्षितं
दूरादेत्य सरो निराकृतनभोवाचो निपीताम्भसः ।
चत्वारः क्रमशो मृता निपतितास्ते भ्रातरो भूभृता
पश्चादापतितेन यक्षवचसां दत्वोत्तरं जीविताः ॥१३१॥

मुक्त्वैष यक्षात्मकताञ्च धर्मो
दत्तारणिर्मानितपुत्रवृत्तः ।
अज्ञातवासस्य यथार्थतां तु
दत्त्वा वरं तत्र तिरोबभूव ॥१३२॥



दत्त्वारणिं द्विजवराय ततो विवृत्ता
लब्धाशिषोऽवसितकाननवासकृच्छ्राः ।
मुक्तानुगाश्च दयितासहितास्समीयु-
र्गूढा विराटनगरं सुदृढव्रतास्ते ॥१३३॥

न्यस्तायुधान् श्मशाने यतिसूदक्लीबसादिगोपतनून् ।
सैरन्ध्रीकृतकान्तान् कौन्तेयान्नो विवेद कोऽपि पुरे ॥१३४॥

कङ्काख्यः कृतवान् सख्यं मत्स्यस्याक्षेषु मस्करी ।
बलल: पाकशालायां पतिरासीच्च पावनिः ॥१३५॥

पार्थो बृहन्नळेत्यस्य पुत्रीं नृत्ताद्यशिक्षयत् ।
दामग्रन्थिस्तु नाम्नासीन्नकुलो हयपालकः ॥१३६॥





सहदेवोऽवहत्तन्त्रीवालो गोकुलपालनम् ।
सर्वेऽप्युर्वीभुजश्चक्रुः श्रीति नीतिविचक्षणाः ॥१३७॥

कृष्णापि मालिनीसंज्ञा शिल्पज्ञा मात्स्यगेहिनीम् ।
सुदेष्णामाश्रिताप्यासीत्पञ्चगन्धर्वसंश्रया ॥१३८॥

स्यालो मात्स्यस्यैनामालोक्य तु कीचकः स्मराक्रान्तः ।
आर्यहृत्मस्तधैर्यः प्रारब्धो नानुलोमिकीं भोक्तुम् ॥१३९॥

तं विलोक्य चपलं पलायिता पातिता च भुवि ताडिता च सा ।
दासभाविनि नृपेऽप्युपेयुषी नैव नाथमधिकां शुचं ययौ ॥१४०॥

वृकोदरोऽपि कोपितो निवारितो दृशा गुरोः ।
महानसं सहानया निशागमे समेयिवान् ॥१४१॥

तदनु स कीचकस्य निधनाय तयाभिहितः
कृतसमयोपयातमवशं विषमेषुशरैः ।
नटनगृहोदरे तमसि सेति गृहीतकरो
दृढतरमुष्टिपातपरिपिष्टममुं विदधे ॥१४२॥

गन्धर्वैस्सैरन्ध्रीहेतुकमाकर्ण्य सोदराघातम् ।
तत्सहजाश्शतसंख्यास्तन्मार्गेणैव तेऽपि तमनुगताः ॥१४३॥

श्रुत्वा वृत्तं कुरूणां पतिरपि तदिदं बद्धवैरस्त्रिगर्तं
मात्स्येशस्यापहर्तुं पशुकुलमतुलं व्यादिदेशातिशूरम् ।
अन्येद्युः पाण्डुपुत्रानगणितसमयान् कानने वर्तयिष्यन्
भूयो भीष्मादिसैन्यैस्स्वयमपहृतवानन्यतो धेनुवृन्दम् ॥१४४॥

मात्स्ये त्रैगर्तसैन्यान्यभिचलति बलैर्निष्क्रयं तस्य मैत्र्याः
प्राप्ते काले विधित्सुस्त्रिभिरपि सहजैरन्वितो धर्मजन्मा ।
युद्धे बद्धं विराटं झटिति रिपुभटैर्मोचयित्वानुजेन
प्रीतस्यास्यैव वाचा हठहृतमपि तं मुक्तबन्धश्च तेने ॥१४५॥

निवर्त्य रिपुनीता गाः स मत्स्यनृपतिः पथि ।
प्रशस्तविजयो निन्ये स्वमित्रसहितो निशाम् ॥१४६॥

वैराटिः स किलोत्तरः कुरुमहीभर्त्रा हृते गोधने
वीरम्मन्यतया वदन् बहु मुहुःस्त्रीमध्यतश्चोत्थितः ।
शक्तामत्र बृहन्नळां जळमतिः श्रुत्वोत्तरावाक्यतः
सारथ्ये रथिनां वरं विरचयन् पार्थं प्रतस्थे रथी ॥१४७॥

पुरान्निरीतः पुरतः स पश्यन्नरातिसैन्यं क्षुभितार्णवाभम् ।
विराटसूनुः प्ररुरोद भीत्या पुरो रिपूणां च्युतचापपाणिः ॥१४८॥

रथादवस्कन्द्य पलायमानं पृथासुतोऽप्येनमनुप्रधाव्य ।
गृहीतहस्तो नितरां विहस्तं कथञ्चिदाश्वास्य रथञ्च निन्ये ॥१४९॥

आवेद्यैवात्मतत्त्वं पितृविपिनशमीपादपादात्तशस्त्रः
प्रीत्या सौत्योद्यतेऽस्मिन् सुरवरवरतो विप्लुतक्लैब्यशापः ।
सज्जः सज्योग्रधन्वा धृतमणिमकुटश्शङ्खसंक्षोभिताशो
गोपालैस्सन्निवर्त्य त्वरितमभिययौ कौरवानेकवीरः ॥१५०॥

एकस्यानेकसंघैस्तु सङ्घर्षे सति हर्षुलाः ।
निजा निमिषभावेऽवतस्थुःस्तुतिपरास्सुराः ॥१५१॥

हत्वा पत्तिद्विपरथहयानेकशो रोषशाली
गाङ्गेयाङ्गेश्वरमुखभुजागर्वसर्वस्वहारी ।
अस्त्रं प्रस्वापनमभिसृजन्निद्रितानाञ्च तेषाम्
सूतेनाजीहरदिह जयव्यक्तये वस्त्रजातम् ॥१५२॥

भग्ने लग्ने च नग्ने गतवति नगरायैव कौरव्यसैन्ये
जन्यक्षोण्या निवृत्तः पितृवनविटपिन्यस्तशस्त्रः पुरेव ।
पुत्रं मात्स्यस्य कृत्वा रथिनमनुगतो गोधनं गोपनीतं
प्रापुः क्लैब्यं च पार्थः पुरवरमविशत्सौत्यमास्थाय भूयः
॥१५३॥

जितत्रिगर्तः पुरमेत्य दृप्तस्सुतस्य शक्त्या कुरुसैन्यजेत्या ।
श्रुतप्रवृत्तिश्च पृथासुतानां ततस्स मात्स्यो मुमुदेऽतिमात्रम् ॥१५४॥

एवं देवनकल्पितं व्रतविधिं निस्तीर्य सत्ये स्थिताः
पार्थाः प्राप्तसमस्तमित्रसहिता दैत्यारिणात्यादृताः
दत्तां मात्स्यमहीभुजा निजसुतेनोद्वाह्य तत्रोत्तरां
सौभद्रेण विनिद्रयत्नविभवा प्रेत्यावसंस्तां पुरीम् ॥१५५॥

पाञ्चालञ्चापि मात्स्यं निरवधिकरुणावारिधिः कार्यधुर्यौ
कृत्वैषां वासुदेवः स्वपुरमभिययौ व्यूढताटस्थमुद्रः ।

नीतिज्ञौ तौ च पौरोहितहितवचसान्दूरगं कौरवन्तं
ज्ञात्वा पार्थाज्ञया निन्यतुरतुलबलान्नैकशो मेदिनीशान्
॥१५६॥

श्रुत्वा पार्थरणोद्यमं कुरुपतिस्सन्नाह्य सैन्यं महत्
साहाय्याय रणे वरीतुमजितं पार्थोऽप्यगाद् द्वारकाम् ।
साटोपं शतकोटिसंख्यसुभटव्रातं व्यपेतायुधं
दैवं चाप्युपलभ्यनिर्भरमुदौ प्राप्तौ च तौ स्वास्पदम् ॥१५७॥

नेतुं नीतिवशाद्वनं पुनरमून् प्रज्ञादृशश्चाज्ञया
प्राप्तं सञ्जयमञ्जसा सुसदृशं सन्दिश्य सन्धित्सवः ।
पञ्चग्रामपरिग्रहादपि रणाभावे धृताशा भृशं
ते वाचास्य सुयोधनाशयविदः प्राणस्पृहाञ्चात्यजन् ॥१५८॥

भूयोऽप्यायोधनशमविधावुत्सुका मित्रमित्रं
दौत्ये कृत्वा त्रिभुवनपतिं पूर्णकारुण्यसिन्धुम् ।
गेहं नागाह्वयमभिमतार्यास्तमर्यादवृत्तं
ज्ञात्वा दुर्योधनमुपगते चात्र योत्सून्निरीयुः ॥१५९॥

सप्तैकादशसंख्यातास्त्वक्षौहिण्यः क्षमाभृतोः ।
पार्थकौरव्ययोरासन् कुरुक्षेत्रे सुरक्षिताः ॥१६०॥

धृष्टद्युम्नं तु सेनान्यं हृष्टश्चक्रे युधिष्ठिरः ।
सुरसिन्धुसुतञ्चान्यः परिपन्थिभयावहम् ॥१६१॥



गणने रथिनां नदीभुवा ननु कर्णोऽर्धरथोऽभ्यधायियत् ।
निदधे स धनुस्ततो रुषा नहि योत्स्ये वधावधाविति ॥१६२॥

खिन्नं पन्नगकेतुमन्वहमहं हन्तास्मि कुन्तीभुवां
सत्यं संयति पार्थिवानयुतशो वध्यशिशखण्डी न मे ।
स्त्रीपूर्वस्सहि पार्षतस्तदमुना योत्स्ये न चेत्यूचिवान्
भीष्मस्संसदि कौरवाय कथयाञ्चक्रे तथाम्बाकथाम् ॥१६३॥

निशम्य स शिखण्डिनश्चरितमुग्रशिष्येमुना-
वपि प्रकटदोर्बलं सुरनदीसुतं मानयन् ।
अनेन विजितामृधे निजरिपून्विजानन् प्रगे
रणाय शिबिरादगात्सह बलेन नागध्वजः ॥१६४॥

सौभद्रद्रौपदेयादिभिरपि तनयैर्भ्रातृभिर्भीममुख्यै-
र्मात्स्येशाद्यैःसुहृद्भिश्शिनितनयमुखैः प्राणमित्रैश्च युक्तः ।
शस्त्राण्यभ्यर्च्य योद्धुं विजयरथगतेनात्ततोत्रेण लक्ष्मी-
भर्त्राग्रे लक्ष्यमाणो रणभुवमगमद्धर्मजोऽप्यात्मसैन्यैः ॥१६५॥

दत्ताभ्यनुज्ञे गुरुभीष्ममुख्यैर्युद्धाय सज्जे सति राज्ञि पार्थः ।
स्मृत्वा महाघं बहुघातभाव्यं योत्स्ये न कृष्णेति बभूव तूष्णीम्
॥१६६॥

हस्तोदस्तशरासनं परिगळद्बाष्पं निषण्णं रथे
निर्विण्णं युधि पाण्डवं करतले गृह्णन् मुकुन्दोऽन्वशात् ।



कोऽसौ ते समये कृपासमुदयस्त्यक्तायुधं त्वां युधि
तस्तं वक्ति समस्तपार्थिवगणो हस्ते दधीथा धनुः ।।१६७।।

मोहो नेहास्तु देहो जगति न नियतो जीर्णवासस्सवर्णो
मुक्त्वा भुक्तन्नवीनं वहति पुनरमुं नित्य एवेह देही ।
को हन्ता हन्यते वा कथय कुरु ततः कर्मसौम्य स्वधर्मं
युद्धं मृत्युर्जयो वा भवतु ननु फले निस्पृहा मुक्तिभाजः
।।१६८।।

हेतुर्बधेऽत्र भव सर्वमहीभृतां त्वम्
मा मा स्पृशेन्न खलु पापलवोऽपि हि त्वाम् ।
आलोकय प्रथममेव हता मयैते
कालात्मनेह वितरामि दृशञ्च दिव्याम् ।।१६९।।

उक्त्वैवं दिव्यमव्याहतगति वितरन्नक्षि पद्मेक्षणोऽस्मै
स्वं निस्सीमोरुतेजस्थगितदशदिशन्नैकवक्त्राक्षिशीर्षम् ।
बाहासाहस्रधूतायुधनिवहमहाभीषणं दिव्यभूषा
दीप्रं द्यावापृथिव्योर्विवरमपि दधद्दर्शयामास रूपम् ।।१७०।

ऐक्यस्थानं जगत्या बहुमुखकुहरग्रस्तभीष्मादियोधं
दृष्ट्वा तत्पुष्टभीतो विहितबहुनुतौ फल्गुने पादलग्ने ।
माभूत्ते भीःस्वधर्मे निधनमपि सखे शर्मणे तन्मृडे त्वं
सद्यः सज्जीभवेत्यैश्वरमपि हि वपुः प्राप तत्सूतभावम्
।।१७१।।



श्रुत्वा दृष्ट्वा च तत्त्वं परमुपनिषदां मुक्तदोषे स्वचित्ते
युद्धोद्योगी जगाहे रिपुनृपपृतनां गाण्डिवी पाण्डुसूनुः ।
एनं शैनेयमुख्याः कपिवरविलसत्केतनं सप्तसंख्या-
लक्ष्यैरक्षौहिणीभिःसममिह परिवार्यान्वयुर्धन्विवर्याः ॥१७२॥

एकाधिकैर्दशभिरुद्धतशस्तशस्त्रै-
रक्षौहिणीपरिवृढैरुपगूढपार्श्वः ।
संरक्षितस्सुरधुनीतनयेन बाणैः
प्रत्युद्ययौ कुरुपतिश्च बलं रिपूणाम् ॥१७३॥

अन्योन्यक्षुण्णवाजिद्विपरथसुभगं भीष्मपार्थादिमुक्तै-
रस्त्रैरुद्दीपिताशं नवभवविबुधासङ्गिदिव्याङ्गनौघम् ।
भेरीधीरप्रणादप्रमुषितदिविषत्स्तोमसांस्ताविनन्त-
द्युद्धं नृत्यत्कबन्धप्रतिभयमभवत्सैन्ययोर्मन्युभाजोः ॥१७४॥

जन्ये जह्नुसुतासुतः प्रतिदिनं हत्वायुतं भूभृतां
कृत्वा सौत्यपरं हरिं विसमयं पार्थं निजास्त्रादिते ।
खिन्दानैर्नवमेऽह्नि पाण्डुतनयैर्नक्तं समेत्यार्थितः
प्रीतो हेतुमुपादिशत् स्वनिधने योषापरं पार्षतम् ॥१७५॥

ददृशे दशमेऽह्नि जह्नुकन्यातनयेनात्तधनुः पुरःशिखण्डी
करमुक्तधनुः स सत्यसन्धः क्षतवर्मा पतितश्च पार्थबाणैः ॥१७६॥

सवितर्युदगयनगते जहि देहमितीरितः स दिव्यगिरा ।
तल्पे पृषत्कक्लृप्ते शेते स्म स्वेच्छामृत्युरसौ ॥१७७॥

द्रोणस्सेनाधिपत्ये त्वथ कुरुवृषभेणाभिषिक्तोऽपरेद्यु-
स्तत्प्रीत्यै धर्मसूनोर्न हननमभिलषन् भग्नकृत्स्नप्रयत्नः ।
त्रैगर्तैर्दूरनीते सति सिततुरगे पर्यभूत्सूर्यजाद्यै-
र्युक्तोऽसौ सुप्रतीकप्रतिभयभगदत्तादितं पार्थसैन्यम् ॥१७८॥

वेगागतेऽथ सगजे भगदत्तभूपे
नीते नरेण नरकप्रभवेऽपि नाकम् ।
भूयोऽपि युक्तविजये च बले रिपूणां
व्यूहं गुरुस्सरसिजोपमितं वितेने ॥१७९॥

व्यूहं तं हरिसारथौ विरहिते कष्टं प्रविष्टः स्वयं
सौभद्रो भृशमर्दयन्नरिभटानेको बहूनाहवे ।
रुद्धेष्वर्धपथे जयद्रथनृपेणान्येषु पाण्डोस्सुते-
ष्वावाव्यैव हतो गुरुप्रभृतिभिःषड्भिः छलाद्बालकः ॥१८०॥

निहत्य त्रैगर्तान्मृडभुवि निवृत्तोऽथ विजयो
निशम्याजौ वृत्तं निजसुतवधं शोकविधुरः ।
स वै सौवीरेन्द्रप्रमथनविधिं भाविनि दिने
रुषा प्रत्यश्रौषीच्छपथविहतौ चाग्निपतनम् ॥१८१॥

सख्युः क्षमे बद्धदीक्षोऽम्बुजाक्षो
नक्तं नीत्वा पार्श्वमीशस्य पार्थम् ।
तुष्टे तस्मिन् दृष्टदिव्यास्त्रमुष्टि
निन्ये चैनं स्वं निवेशं प्रभाते ॥१८२॥



स्वप्नोत्पन्नं किल तदखिलं कल्पयन् सुप्रबुद्धे
बद्धोद्योगे सति बलयुगे वासरेऽसौ तुरीये ।
सूचिव्यूहं गुरुविरचितं गाहमानो हि मानी
चोस्त्रैर्भास्वानिव शरशतैरर्दयद्वैरिसेनाम् ॥१८३॥

रथ्याश्वेषु तृषार्दितेषु हृषितेष्वस्त्रार्जितैर्द्राग्जलै-
श्शैनेयानिलसूनुसाह्यकलनाद्वाह्वोर्बले बृंहिते ।
प्राणान् क्षोणिभृतां हरन्निह शरैरन्विष्टसिन्धूद्वहः
सोऽयं सायमरेश्शिरो हरिकृपालक्ष्यं शरेणाहरत् ॥१८४॥

दोषाद्दोषासमररसिके कौरवे कालविद्भिः
पार्थैर्मूर्तं स्मृतमिव यमं त्रासयन्तं भटौघान् ।
हैडिम्बेयं विजयनिधनोपात्तया शक्रशक्त्या
चक्रे निघ्नं मुदमपि शुचं सैन्ययुग्मस्य कर्णः ॥१८५॥

मात्स्ये च द्रुपदेऽर्दितेऽस्य विशिखैस्त्रस्तेन धर्मात्मजे-
नाश्वत्थामवधे मुधैव कथिते विन्यस्तधन्वा रथे ।
शोकेनाकुलितः पतन् द्रुपदजेनाकृष्य केशेष्वहो
खड्गाहृणशिरा गुरुस्सुरपथं शस्त्राध्वना प्रापितः ॥१८६॥

गुरुसूनुमहास्त्रविप्लुतं बलमात्मास्त्रबलेन पालयन् ।
शतमन्युसुतोऽह्नि पञ्चमे शिबिरं प्राप मुहुः स्मरन् गुरुम् ॥१८७॥



कृत्वा सेनान्यमन्येद्युः कर्णं निर्णीतपौरुषम् ।
सुयोधनो ययौ योधैस्सहैवायोधनाङ्कणम् ॥१८८॥

युध्यन्नस्तभयं विभाकरसुतस्त्वाद्येऽह्नि धिन्वन् कुरून्
सारथ्ये रथिनं परेद्यवि मुदा संयोज्य मद्रेश्वरम् ।
तद्वाक्यैर्दलितोऽपि मर्मभिदुरैरक्षुण्णधैर्योऽभ्ययात्
कर्णो जन्यसमुत्सुकःसितहयं धन्वी वरं धन्विनाम् ॥१८९॥

जन्ये गाण्डिवकालपृष्ठविगळच्छस्त्रौकरुद्धाम्बरे
वीराग्रेसरको वृकोदरदृशोर्दुश्शासनोऽभूत्पुरः ।
हस्तग्राहममुं गृहीतमहितं भूमौ निपात्योरसः
क्षुण्णात्तीक्ष्णमुखैर्नखैः क्षरदसृक्कोपादपात्पावनिः ॥१९०॥

राजानुजानिति हतानिनलात्मजेन
स्तोकावशेषमिह राजकुलं बलं च ।
दृष्ट्वा सुतञ्च निहतं वृषसेनमग्रे
रुष्टः समाह्वयत फल्गुनमर्कसूनुः ॥१९१॥

शस्त्रास्त्रैरभियुध्यतः प्रतिविधायामुष्य मुक्ते ततो
नागास्त्रे विफलीकृते च जगतां नाथेन सूतात्मना ।
छिन्दन्निन्द्रसुतश्शरेण च शिरस्सूर्यात्मजस्याश्रितं
तत्तेजस्त्वधिपं त्विषामनिमिषैरस्तावि पुष्पोत्करैः ॥१९२॥

मद्रेशः कुरुनाथेन कृतःसेनापतिः प्रगे ।
धर्मजेन तु मध्याह्ने प्रेतनाथातिथीकृतः ॥१९३॥



बलैऽखिलेऽपि क्षपिते गुरोस्सुते
पराद्रुते द्राक्कृपसात्वताग्रगे ।
सरोनिमग्नः कुरुभूपतिर्भया-
द्वृकोदरेणैक्ष्यत वारिनिर्गतः ॥१९४॥

इतरेतरमाविद्धगदयोरिति वैरिणोः ।
ववृधे विबुधस्तोत्रमुखरस्समरस्तयोः ॥१९५॥

निर्घातोग्रगदाग्रघातपरिभग्नोरौ कुरुक्ष्मापतौ
तद्वृत्तोत्थरुषा वृषाकपिकृपालब्धां कृपाणीं वहन् ।
द्रौणिर्भोजकृपान्वितोऽधिशिबिरं सुप्तान्निशीथे भटान्
धृष्टद्युम्नशिखण्डिनौ द्रुपदजापुत्रांश्च हत्वा ययौ ॥१९६॥

श्रुत्वा पुत्रसुहृद्वधन्निशि कृतं क्रुद्धः प्रगे मारुतिः
प्राप्य व्यासवने महास्त्रमहसा भ्रूणद्रुहं द्रोणजम् ।
शप्तं दैत्यभिदा हठेन सहजं हृत्वा शिरस्तो मणिं
जीवन्तं विसृजन् समेत्य सहजान् प्रीतां प्रियां चाकरोत्
।१९७॥

प्रज्ञादृशं ज्ञातिवधूजनान्वितं
कृष्णाज्ञया भ्रातृयुतो नमन् पदे ।
प्रसाद्य चैनं तदनुज्ञयाकरोत्
सुतादिकान् युद्धहतानिहाग्निसात् ॥१९८॥

दत्त्वामर्त्यधुनीजलैर्निवपनं तेभ्यः पृथावाक्यतः
कर्णायापि विदीर्णधीर्निजपुरीमाविश्य पौरान्वितः ।



कृत्वा चाखिलमौर्ध्वदैहिकविधिं तेषां तदात्वोचितं
व्यासाद्यैःसुखमभ्यषेचि पृथिवीराज्येऽपि धर्मात्मजः ॥१९९॥

आसन्ने सवितुरुदङ्मुखे प्रचारे
व्यासाद्यैःसह सहजैश्च धर्मजन्मा ।
नाथेनाप्यथ जगतां मुदा मुकुन्देना-
साद्य त्रिदशनदीसुतं ववन्दे ॥२००॥

तल्पे क्लृप्ते पृषत्कैरगणितरुगसौ निर्मलब्रह्मभूतं
पश्यन् विश्वं शयानो नयनपथगते तत्र भक्तैकबन्धौ ।
सान्द्रानन्दे मुकुन्दे विहितबहुमतिं धर्मजापादनम्रं
सान्त्वैः संतोष्य पृष्टोऽकथयदखिलशास्त्रार्थतत्त्वं च तस्मै ॥२०१॥

पश्चात् पृच्छति धर्मजन्मनि परं दैवं च धर्मं परं
जप्यं मुक्तिफलप्रदं च मुदितोऽवादीन्नदीनन्दनः ।
दैवं दिव्यमयं हरिस्त्रिजगतां सेवान्त्यधर्मः परः
श्रीमन्नामसहस्रमस्य तु जपन्मुक्तो नरः स्यादिति ॥२०२॥

एवं देवव्रतोऽयं निभृतमुपदिशन् धर्मजाताय नाथे
भासामाशामुदीचीमयति बहुमुखीं संहरन् वैखरीं स्वाम् ।
पश्यन् विश्वेशमन्तःस्थितमपि हि दृशा मर्त्यदेहं जिहासु-
र्भक्त्या बद्धाञ्जलिश्चाकुरुत नुतिगिरो नैकरूपा मुरारेः
॥२०३॥



विश्वस्थित्यै विहृतिविहितब्रह्मरुद्रादिमूर्तौ
यत्र प्रत्यङ्महसि सहसा लीयते लोक एषः ।
नित्ये शुद्धे विलसदमलानन्दसान्द्रे मुकुन्दे
चित्तं नित्यं मम विरमतादस्तविश्वप्रभेदम् ॥२०४॥

हर्तुं पृथ्व्या दितिजसुभरं क्लृप्तमर्त्यावतार-
स्तद्वृत्तैर्भुवनविनुतैः पापहा पादभाजाम् ।
भक्तप्रीत्यै कलितनयनानन्दसन्दायिमूर्तिः
कृष्णो जिष्णोः प्रियहितरतस्सोऽयमक्ष्णोर्ममास्ते ॥२०५॥

केकिपिञ्छकृतशेखरं समरधूळिधूसरितकैशिकं
स्वेदनुन्नतिलकातिरम्यनिटिलान्तलोलकुटिलाळकम् ।
स्वैरचारपरलोचनांशुपरिपीतवैरिपृतनायुषं
स्मेरचारुवदनाम्बुजं विजयसारथिं भजति मानसम् ॥२०६॥

उन्मिषन्मकरकुण्डलीललितकङ्कणाळिबहुलोर्मिका-
हारसारसननूपुरादिरुचिपूरशारमधुराकृतिम् ।
भानुबिम्बरुचिराम्बरावृतनितम्बमम्बुदरुचिं विभुं
पाणिचञ्चलकशाञ्चलं परमपूरुषं चिरमुपास्महे ॥२०७॥

आततायिनि समागते सकलराजलोकपृतनायुगे
भ्रातृमातुलपितामहादिवधभाविपातकभयाकुलम् ।
भाषितोपनिषदर्थतत्त्वहृतमोहमाशु विजयं व्यधा-
द्यो हि मोहमपहन्तु मे स हृदि कोऽपि पार्थरथसारथिः
॥२०८॥

आहवे महति मामकैः सरदि सायकैः सुहृदि खेदिते
सौत्यमात्तमपहाय कीर्तिमतुलां ममेह परिबृंहयन् ।
कोपवानिव कृपाकुलो धृतरथांगमर्जुनशतां गतः
कम्पयन् भुवमवप्लुतो मम महाप्लवोऽस्तु भववारिधेः
॥२०९॥

वेगतो गळितकेशबन्धमुपगण्डलोलमणिकुण्डलं
कोपयावकितलोचनं स्खलितनूपुरादिकलितारवम् ।
धूतपीतवसनाञ्चलं चलतराग्रदर्शितसुदर्शनं
तत् परिस्फुरति दर्पतो मदुपसर्पणं हृदि जगत्पतेः ॥२१०॥

कार्मुकान्मुहुरुदित्वरैरहितजित्वरैर्मम शरोत्करै-
स्तत्र तत्र गलितत्वगुद्गलितरक्तसिक्तशबलद्युतिः ।
मत्तहस्तिवरमर्दनत्वरितपञ्चवक्त्रवदिमञ्जनं
हन्तुमन्तिकगतोऽस्तु संप्रति हृदन्तरे स हि चिरन्तनः ॥२११॥

धर्मजन्मयजनोत्सवे महितमग्रपूजनमधत्त य-
स्संमतं मुनिनृपोत्तमैस्समिति शर्मतो जगति धर्मिणाम् ।
नर्महासरुचिरावलोकविवशीकृताश्च पशुपाङ्गना
निर्मलं पदमुपानयत् स मम चिन्मयो मनसि जृम्भताम्
॥२१२॥

हन्त हन्त दलितं तमो हि मिलिता दिशोऽपि महसा हरे-
रञ्जसा चिरधृतं जहामि बत पाञ्चभौतिकमिमं जडम् ।
वीतखेदमुखभास्वरं स्वरससंविदात्मकमसंवृतं
ज्योतिरादिरहितं महत् स्वयमुपैमि चाहममलं पदम् ॥२१३॥



स्तावं स्तावं मुहुरिति हरिं कान्तिधारां तदीयां
पायं पायं नयनचुलुकैरुद्गलद्बाष्पपूरम् ।
दर्शं दर्शं परचिदममलानन्दरूपं स्वमन्त-
र्देहं मोहालयमिव जहत् सोऽभजद् ब्रह्म भूयम् ॥२१४॥

तूष्णीकेषु सभागतेषु नभसो भेरीरवे निष्पतत्
पुष्पौघोत्थितषड्पदारवपराभूतेऽपि भूयस्तरे ।
शोचिष्केशवशं विधाय सहसा देहं स पैतामहं
गङ्गायां कृतपैतृकः पुरमगात् धर्मात्मजः सानुजः ॥२१५॥

अश्वत्याममहास्त्रवह्निविवशे जातेऽभिमन्योस्सुते
पादस्पर्शनतः सुदर्शनबलाच्चोज्जीविते चक्रिणा ।
श्वेताश्वेन भुवीह चारितमखाश्वोऽसौ कृपैकाश्रयः
कृष्णस्याकृतकं क्रतुं परिवृतो धौम्यादिभिर्धर्मजः ॥२१६॥

देवे स्वावसथं गते यदुपतावेकातपत्रीकृतां
धात्रीमार्तिहरः स तामुरुकृपाशाली चिरं पालयन् ।
वृद्धं पुत्रवधातुरं स्वचरितैरन्धं नृपं तोषयन्
मित्रामात्ययुतोऽनुजैः स्वनगरे राजाधिराजो बभौ ॥२१७॥

सञ्जयविदुरपुरोगः सञ्चरवानेष पाण्डवानुमतः ।
वृद्धो नृपः प्रतस्थे सक्तो विपिनेषु सौबलीयुक्तः ॥२१८॥

पृथा चैनमनुप्रायात् सुतैश्वर्ये विनिस्पृहा ।
सहिताश्शतयूपस्य राजर्षेराश्रमेऽवसन् ॥२१९॥



विदुरोऽपि दुरापं तत्पदमोप्सुर्गतस्पृहः ।
तीर्थासेवी वने तत्र मृगचारं चचार सः ।।२२०।।

आलोकितुं सोऽथ गतः पितृव्यं
काले कदाचिन्नरपालमौलिः ।
मासं वसन्नत्र वने निजांश-
मुक्तात्मनः क्षत्तुरवाप धर्मम् ।।२२१।।

व्यासेनासेदुषा दर्शितसुतशतकं योगशक्त्या महत्या
प्रत्याश्वस्तं पितृव्यं कृतचरणनतिश्चैनमापृच्छ्य यातः ।
धर्मैर्निर्णीयमानैर्मुदितमतिवसन् मन्दिरे दाववह्नौ
शृण्वन् कुन्त्याश्च पित्रोर्गतिमदितनृपस्सानुतापो निवापम्
।।२२२।।

कृष्णावेक्षणकौतुकादथ गते पार्थे निवृत्ते ततः
श्रुत्वा तापसकोपतो यदुकुलस्योत्सादनं मौसलम् ।
देवस्यावनिमध्यतो निजपदप्राप्तिश्च तत्तादृशीं
मार्गे भग्नभुजाबलञ्च तमलं खिन्नोऽभवत् पाण्डवः ।।
।।२२३।।

कृत्वा पौत्रमथो परीक्षितमिह क्षोणीपतिं प्रस्थिताः
पार्थास्ते सह कृष्णया पथि शुना केनापि चानुद्रुताः ।
प्राणत्राणपराङ्मुखा परिलसच्चीराम्बराः प्राङ्मुखा-
श्चाक्रम्य क्रमशो दिशः प्रतिगताः पश्चाद्ययुश्चोत्तराम् ।।
।।२२४।।

पार्षतीमपि माद्रेयौ पार्थभीमौ च भूतले ।
पतितानवेक्ष्यागाच्छुनैवानुगतो नृपः ।२२५।।



अग्रे वीक्ष्य शतक्रतुं निजविमानारोपणे सत्वरं
त्यक्तुं कुक्कुरमक्षमस्सुरवरेणोक्तोऽथितस्थौ क्षणम् ।
धर्मंस्सम्यगमुं परीक्ष्य मुदितस्तां सारमेयाकृतिं
मुक्त्वा स त्रिदशाधिपो मणिरथे नैनं च निन्ये दिवम् ॥
॥२२६॥

सोऽयं मायानिरयपतितान् सोदरादीन्निरीक्ष्य
व्याक्षिप्तात्मा क्षणमिव मृषोद्योत्थमेतद्विजानन् ।
देवादेशाद्वपुरिह जहन् मानुषन्नाकनद्यां
दिव्याकारं सुरमुनिवरैस्तावदस्ताविं मोदात् ॥२२७॥

स्वर्गे वीक्ष्य मुदान्वितः स्वसहजान् कृष्णां च साक्षाद्दिवो
लक्ष्मीमक्षतपुण्यसञ्चयजितानासाद्य लोकानसौ ।
प्रीतिं सातिशयां महीभरहरैर्वृत्तैश्चिराम्रेडितैः
कुर्वन् सर्वदिवौकसान्दिवि बभौ धर्मात्मजन्मा नृपः ॥२२८॥

एतद्व्यासमुखोदितं हरिकथासंमेलनोल्लालितं
सद्वृत्तैः पुरुषार्थतत्त्वविशदाख्यानादिह ख्यापितम् ।
संक्षिप्तं बहुवृत्तमिश्रमुदितं निःश्रेयसैकाश्रयं
श्राव्यं सर्वमलापहं प्रतिदिनं वर्ण्यं च पुण्यात्मनाम् ॥२२९॥

बहुवृत्तसंक्षेपभारतं समाप्तम् ।



# श्लोकानुक्रमणिका

—



# शुद्धिपत्रम्

| अशुद्धः | शुद्धः | पृष्ठम् | श्लोकसंख्या |
|---|---|---|---|
| सान्ले | सान्ते | 7 | 34 |
| कृष्णन्वि | कृष्णान्वि | 11 | 56 |
| पञ्चानां पृ | पञ्चानां च पृ | 13 | 68 |
| विश्वलो वि | विश्वलोकवि | 13 | 69 |
| विभ्रद्विप्र | बिभ्रद्विप्र | 14 | 71 |
| विहाह्वाय | विहायाह्वाय | 16 | 83 |
| क्लुप्त | क्लृप्त | 17 | 89 |
| तद्भूतले | तद्भूतले | 19 | 97 |
| पुनदुरोदर | पुनर्दुरोदर | 19 | 99 |
| क्लुप्त | क्लृप्त | 19 | 100 |
| निजास्त्रम | निजास्त्रम् | 20 | 105 |
| १९८ | १०८ | 21 | 108 |
| मुन्ततः स्क | मुन्ततः क | 23 | 119 |
| क्लुप्त | क्लृप्त | 23 | 122 |
| कर्म | कम्रं | 24 | 129 |
| प्रेत्या | प्रीत्या | 28 | 155 |
| कर्मसौम्य | कर्म सौम्य | 31 | 168 |
| निस्पृहा | निः स्पृहा | 31 | 168 |
| सान्द्र | सान्द्रे | 38 | 204 |
| कृषाकुलो | कृपाकुलो | 39 | 209 |

## BAHUVṚTTASAṂKṢEPABHĀRATA

Bahuvṛttasaṃkṣepabhārata summarises the main story of the Mahābhārata. It has employed various metres as indicated in the title. The author shows commendable mastery over the language as well as metre. His familiarity with the story of the Mahābhārata has stood him in good stead for giving a highly readable resume of the Mahābhārata.

~~Price Rupees Ten~~

---

Oriental Research Institute and
Manuscripts Library,
University of Kerala Trivandrum,